एकं शून्यमिदं नपुंसकपरं तच्छन्दसस्त्वात्मकं
स्त्रीः-पुंसोस्तु विसर्ग एव विहितः सन् विन्दुयुग्मात्मकः ।।
आख्यातेऽपि तु तत्क्रियापदगतः स्यात् तत्क्रियाद्यर्थकः
सोऽप्यन्याक्षरशब्दनामरहितस्तत्तद्विभक्त्यर्थकः ।।१८।।

नित्यं लिङ्गविभक्तिभिश्च वचनैर्योगात् समासात् कृतेः
यन्नव्येति तदव्ययं क्वचिदपि प्रायोगिकेष्वर्थभाक् ।।
अत्यन्तर्बहिरूर्ध्वतश्च परितो नाना तदानीं स्वयं
स्वः सायं च दिवा पुनश्च बहुशः श्वः सर्वशः प्रायशः ।।१९।।

सोऽनुस्वारपरोऽखिलाक्षरशिरो बिन्दुः सदैकात्मकः
स्याद् वर्णात् पुरतः क्वचित्तु तदधो भाषालिपेर्भेदतः ।।
सर्वत्रापि विसर्ग एव पुरतः पूर्वत्र सोऽर्धात्मकः
ते रेखाक्षरलेखनेषु विहितो वाचि स्वरैकात्मकाः ।।२०।।

वक्त्रोद्घाटनपूर्वकं सुवचने तत्सम्पिधानाद् असोः
नासाऽनुस्वरितो बहिर्निजगतेरुच्छ्वासतः सर्वतः ।।
नासिक्योऽयमनुश्रुतः श्रुतिमुखात् पूर्णात्मकः सन् स्वयं
पूर्णात्मानमनूदितोऽखिलमुखात् तस्मादनुस्वारभाक् ।।२१।।




तस्मादक्षरनादबिन्दुककलारूपाद्यतीतात्मनः
सानुस्वारमयं समं रसमयं विद्यादनुज्ञाक्षरम् ।।
सर्वाद्यं परमं स्वमन्त्रकमयं स्वावर्तयन् योगतः
तत्त्वैक्येन समासतः समरसात् प्रज्ञानभाक् स्यात् स्वतः ।।२२।।

वेदे मन्त्रमुखे तु बिन्दुरुदितः सोऽप्यर्धमात्रात्मकः
वाग्रूपोऽयममात्रकोऽपि विदितो नोच्चारणीयः परः ।।
गुप्तः स प्रणवाक्षरादिषु हितः सन्नेकबिन्दुः स्वरः
ब्रह्मैकात्मक एव सन् निगदितः पूर्णः पराशक्तिकः ।।२३।।

सद्बिन्दुस्वररूपकं परतमं प्रत्नं जगत्कारणं
विश्वस्यास्य हि सङ्क्षयेऽपि सततं विश्वाप्ययैकास्पदम् ।।
साक्षाद्ब्रह्मगुणान्वयादिह पुनस्तन्निर्गुणे निर्गुणं
तस्मिन् वस्तुपरेऽक्षरे स्थितमिदं पूर्णं समं सद्गुणम् ।।२४।।

विश्वेषां जगतां परं पदमदो विश्वाद्यधिष्ठानकं
विश्वारम्भणचित्क्रियादिकरणं सन्मूलबीजात्मकम् ।।
सङ्ख्यामानगुणक्रियादिरहितं विश्वैकमानात्मकं
प्रत्यक्षं परवस्तुनः समुदगाद् बिन्दुः प्रतीकं स्वयम् ।।२५।।

वाच्यार्थेऽष्टमनाद्यनन्तमुदितं लक्ष्यार्थकं वाचकं
छन्दःसस्वरसद्रसानुनदितं तद्बीजमन्त्रात्मकम् ।।

चिन्नादस्वरनामरूपचितिभिः स्फूर्त्यक्षराद्यात्मकं
विन्दुर्मन्त्रमयः स्वसंविदुदये सन्मौनमुद्रात्मकः ॥२६॥

तन्मन्त्रानुजपात् तदर्थमननान्मूर्धन्यविज्ञानभाक्
तद्वाचाऽनुकृतेर्जपादिकक्रतौ लक्ष्यार्थसद्भावनात् ॥
हृद्योगेन समस्ततत्त्वमुखतो विन्दुस्वरालम्बनात्
सद्यस्तत् समुदेति शक्तिकलितं सद्वस्तुसत्त्वं स्वयम् ॥२७॥

सत्त्वं शक्तिपुमात्मनोः समरसाज्जयोती रसैकात्मकं
तस्मिन्नभ्युदिते महाद्युतियुते सच्छान्तिशक्त्यूर्जिते ॥
अज्ञानान्धतमोभयादिशमनाद्दुष्पापतापोल्लयात्
प्रज्ञानामृतपूर्णबिन्दुरुदियान्मूर्ध्नि स्वशान्त्यै श्रियै ॥२८॥

विन्दुः सोऽयमणोरनादिरकलः सन्नप्यणीयान् स्वयं
ब्रह्मात्मादिरिवैव सत्यशबलश्चिन्मात्रसत्त्वान्वयात् ॥
व्याप्त्या विश्वविभूतियोगमुखतः प्रज्ञानभावाश्रयः
पूर्णश्चन्द्र इवेन्द्र एव महतो भूमा महीयान् समः ॥२९॥

सानुस्वारविसर्गबिन्दुयुगलो हंसः समन्त्राक्षरः
सोऽहञ्चित्स्फुरणात्मवाक्स्वररसब्रह्मात्मसत्त्वाक्षरः ॥
हंसीं वाचमनुष्टुभं समनुयन् इन्द्रोऽयमात्मा मुदा
हंसात्मा स सुसन्दृगेव परमः सन्दर्शनीयो विदा ॥३०॥

"हिङ्कृण्वती वसुपत्नी वसूनां" इति दीर्घतमाः ऋषिः।
वाग्धेनुर्देवता। त्रिष्टुप्छन्दः॥

हिङ्कृण्वती वसुपत्नी वसूनां
वत्समिच्छन्ती मनसाऽभ्यागात् ॥
दुहामश्विभ्यां पयो अघ्न्येयं
सा वर्धतां महते सौभगाय ॥

(ऋ० मं, १, १६४, २७)

॥ पदपाठः ॥

"हिम्ऽकृण्वती। वसुऽपत्नी। वसूनाम्।
वत्सम्। इच्छन्ती। मनसा। अभि। आ। अगात्॥
दुहाम्। अश्विभ्याम्। पयः। अघ्न्या इयम्।
सा। वर्धताम्। महते। सौभगाय॥

॥ कल्पलता ॥

वाग्धेनुर्वसुपालिका वसुमती पत्नी वसूनां सती
सेच्छन्ती मनसाऽखिलं जनगणं हिङ्कुर्वती साऽऽभ्यगात् ॥
अश्विभ्याममृतं महः-रसमयं सत्त्वं दुहाना सतां
विश्वस्यैव हि सौभगाय सहते योगाय सा वर्धताम् ॥३१॥

वाग् वै वेदचतुष्टयस्तनमुखा संविद्रसानां निधिः
वेदात्मा भुवि "कामधेनु"—रुदगात् सर्वार्थदोग्धी सताम् ॥
अघ्न्या सेयमहिंस्यवाक् सुललिता सा "दैवरातोदिता"
धन्या "कल्पलता" सुधादिकलिता(ऽऽ)कल्पान्तमा वर्धताम् ॥३२॥

॥ इति द्वात्रिंशी कला सम्पूर्णा ॥

॥ प्रथमा वेदार्थकल्पलता समाप्ता ॥

सेयं जनता-जगद्-ईशस्य

करकमलाञ्जलौ

समर्पिता

॥ चिरं विजयताम् ॥

लेखनम्
नई देहली
सं० २०१९ सन् —१३-१०-१९६२
शके—१८८४
आश्विनपूर्णिमायां
स्थिरवासरे समाप्तिं नीता

इत्यादि विज्ञापयिता
भवदीयः
वेद-विद्वद्-विधेयः
दैवरातः
ऋषिकुल—योगाश्रमः
गोकर्णः



